वाणीं भजस्व गैर्वाणीम्

# गैर्वाणी

## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ. प्र.) भारतम्.

संपुटः १०   15 OCTOBER 1972   क्रमांकः १०



परीधावि-आश्वयुजांकः   शकाब्दाः १८९४   मूल्यम् ०-४० पैसाः

# विषयसूचिका








# महार्घपिशाचिके !

वेतनं गिलसि यातनां वितरसि
पूतनेव विषमयी पोतान् संहरसि,
आततायिनी जनान् अनुक्षणमनुधावसि
भीतान् क्षुधा शस्त्रेण निकृन्तसि मर्माणि ॥ महा ॥

छायारूपा भवसि मायारूपा द्योतसे
मायामृग इवाकर्षसि मरुभूमौ मानवान्,
भृतिं निभृतं कबलयसि स्मृतिं विभ्रंशयसि नितराम्
कुचेलात् अश्वस्तनिकान् कल्पयसि आर्जनपरान् जनान् ॥ महा ॥

न भूपतिः न वणिक् नोपाध्यायो न वा कार्मिकः
न नियोगी न वा योगी न च रोगी न त्यागी
न पालको न बालको न वा खेलको न हालिकः
भवत्याः करालदंष्ट्राग्रास्यूतो दृश्यते भारते ॥ महा ॥

गजा मशकायिताः पर्वताः कन्दुकायिताः
धनिनो प्याध्माताः अधनाश्च निकृष्टाः
त्वद्विकटपदघट्टननिष्पिष्टाः हाहाकुर्वन्ति प्रजाः
नास्ति ते करुणा ? नास्ति ते घृणा वा? महार्घपिशाचिके ! ॥महा॥



# सम्पादकीयम्

## कार्मिकन्यायः - धार्मिकापायः

अस्मत्सर्वकारः प्राचीनपद्धतिषु दोषदर्शने तत्तत्परिवर्त्य नवीनमार्गान् स्थापयतीति भृशं मोदस्थानं। निर्दिष्टकुलानां अपुरोगामिनां च जनानां कृते कानिचन सौविध्यान्यातनोति तदितरापीडकमिति च सन्तोषास्पदम्। एतदेव चिन्त्यं यदितरपीडनपूर्वकमितरेषां सौविध्यं संपादयितुं यतते इति। एवंविधानि च कार्याणि बहूनि सन्ति तस्य। अत्र तु तन्मध्ये कार्मिकन्याय इत्यंशं समालोचयामः।

न्यायस्तु वर्गमतपक्षपातरहित एव स्यात्। अन्यथा स न्याय एव न भवति। एकपक्षाभिमानस्य हितस्यैव न्यायतुलारोहणं न युज्यते। एवं स्थिते कार्मिकपक्षप्रोत्साहनार्थं अन्यपक्षपीडनार्थं च यो न्यायः आवेश्यते स सुतरां चिन्त्य एव भवेत्। कार्मिकाणां रक्षणव्याजेन काचन प्रभुत्वशाखा, तत्पोषणं तद्द्वारा च विवादानां अंकुरारोपः, पोषणं, विषफलप्राप्तिरिति अनुभवसिद्धमेवैतत्। नैतावता पर्याप्तमिति कर्मस्थगनाधिकारप्रदानं, तेन खिन्नानां अश्रुप्रमार्जनाय कार्यालयसमापनाधिकार, एतयोः कर्मणोः कंबलस्थापितान्नरोमोद्धरणमिव साध्वसाधुताचिन्ता, साधुत्वासाधुत्वनिर्णयाशक्तिः, उभयपक्षसन्धिप्रयत्नः, एवमादिकर्मणामंगोपांगनिर्वहणं, एतदन्तरे

कार्मिकाणां कार्यकार्यालयध्वंसयत्नाः, तन्निराकरणाय रक्षणप्रदानं, दत्तेपि तस्मिन् पूर्वं मध्ये वा महत्याः संपत्तेः हानिः, प्राणस्य प्राणानां वा हानिर्वा इत्येवं रीत्या बहुविषफलजटिलः अयं मार्गः अबद्धं पठित्वा कुचोद्यं करोतीतिन्यायं स्मारयति ।

बहुधनव्ययेन महत्या मेधया साहसेन लाभमपेक्ष्य नष्टानि सोढ्वा च स्थापिते वर्धिते च कर्मागारे क्षेत्रे वाणिज्ये वा स्थापयितु रधिकारं संकोच्य, लाभनष्टयोः अनन्विते स्वकर्मण्यपि कर्तुमकर्तुमन्यथा कर्तुं च समर्थे अस्थिरे कार्मिके अधिकारविभजनं न्यायत्वेन परिगण्यते इदानीम् । लाभमलाभं वा अविगणय्य कार्मिकेभ्यः अष्टशातभून्यास (बोनस्) प्रदानादिनिर्णयाश्च अशुभोदर्काः प्रतीयन्ते । लाभ एव नास्तीति खिद्यन् तत्स्वामी वेतनसमर्पणमात्रेपि अशक्तः भून्यासं कथं वा निर्यातयेत् ?

दक्षिणपट्टिकामार्ग - कर्मस्थगनेन वा सर्वकारस्य लोचने निमीलिते श्रावणौ च शुश्रुतौ अभवताम् । अधुना पट्टिकामार्गकर्मचारिणा कर्मस्थगनेन कियत् नष्टं सर्वकारस्याऽभवदिति आलोच्यताम् । न तावत्सर्वकारस्यैव, प्रजानां च तादृशी कार्यहानिस्संजाता यादृशी सूयजकुल्यापिधानात्परिसरदेशानां ।

अत्र संदर्भे कश्चन वृत्तान्तः मतिमारोहति-कश्चित् उत्तमर्णः ऋणं प्रत्ययच्छन्तं अधमर्णमुद्दिश्य न्यायस्थाने अभियोगमकरोत् । दुष्टो धृष्टश्चाधमर्णः ऋणं निराकर्तुमिच्छन् कंचन वाक्कीलं शरण मगच्छत् । स च ऋणधनार्धपरिमितशुल्कप्रदानं प्रतिज्ञापयन् अभियोगं प्रत्यभ्ययुङ्क्त । अन्ते विचारणवेलायां स स्वाश्रितं अधमर्णं कंचन पाठमशिक्षयत् - कस्यापि वास्तु प्रश्नस्य "बे बे" इत्येव उत्तरं देयं नान्यत्किमपीति ।

न्यायालये विचारे प्रवृत्ते अधमर्णः स्ववाक्कीलस्य बोधं

यथातथं अन्वचरत् । वाक्कीलश्च स्वाश्रितस्य अविवेकितां अबोधतां, उत्तमर्णस्य कपटनैपुण्यं च प्रख्याप्य यथाकथमपि अभियोगं न्यवारयत् । विजयगर्वितः स वाक्कीलः आत्माश्रयं अधमर्णं प्रतिज्ञातं शुल्कं अर्पयितुमादिशत् । परन्तु धृष्टः स 'बे' इत्येव प्रत्युदतरत् । बहुधा याचनेपि स तदेवावर्तयत् । वाक्कीलश्च साम्ना तं वशयितुमिच्छन् वादिविषये एवं वचनमाशिक्षितं, न मद्विषये । अतः कृपया प्रतिज्ञातं धनं प्रयच्छेति अयाचत । परन्तु स अधमर्णः –ते बे बे, तव पित्रे बे बे, तव पिताह्याय च बे बे इति वदन् ततोऽपक्रान्तः इति ।

एवमेव अन्यदमनाय प्रयुक्तमिदमस्त्रं स्वगळमेव कर्तयितुमुद्युक्तं इति अद्यापि पालकाः केचनोपजानन्तीति परिश्रमाणां पारिश्रामिकाणां चारुणोदयस्संभाव्यते ।

**अंगांगिभावमज्ञात्वा भंगमेव व्रजन्ति हि ।**
**हस्तमस्तकपादादिव्यत्ययेनैव देहिनः ॥**

---

अतीताङ्के (सेप्टंबरांके) गजाननसुप्रभातस्य लेखकः श्री बालगणपतिभट्टः, श्रीरंगपत्तनवास्तव्यः । प्रमादवशात् तत्र तन्नाम नावेशितमिति खिद्ये ।

**– संपादकः**

# गांधीकथा

लेखकः श्री बालगणपतिभट्टः, श्रीरंगपत्तनम्.

अर्धनग्नानां, अपूर्णोदराणां भारतीयानां रामराज्यसुख-सन्तोषादि-इष्टजातं दिदित्सवः परमादरणीयाः महात्मगांधी-महोदयाः स्वयं अर्धवसनावृत-देहाः भूचणकाद्यकिञ्चनाहार-सेवनरताश्चासन्। ग्रीष्मे, प्रावृषि, हेमन्तेऽथवा तेषां परि-धानं न परिवर्तते स्म। स्वदेशेषु, विदेशेषु, प्राच्यावाच्यदेशेषु वा तेषां वेषः कदापि विपरिवर्तितो न दृष्टः। अन्येषां कृतेऽपि वा-त्मनः एतन्नियमं न त्यक्तुं सुतरां सिद्धाः ते। चतुर्हस्तात्मकं एक-मधोंऽशुकम्, एतन्मानमितमे-वैकोत्तरीयं च स्कन्धे।

भारतीयजनतायाः दुःखानि तदानीन्तनशासकानां परिचाय-यितुं जातु ते इंग्लेंडराष्ट्रमग-च्छन्। तत्र तदा आंग्लमंडल-सम्राट् जार्जपञ्चमः। कस्मि-श्चिन् प्रदोषे गांधीजी-महात्मनां जार्जमहोदयेन अह्वानं प्राप्तं संदर्शनार्थम्। "बकिंगह्याम" राजप्रासादे मिलितावेतौ।

परस्परसंदर्शनानन्तरं प्रति-निवर्तमानान् गांधीमहाशयान् एकः अज्ञातोऽपृच्छत –

"महात्मन्! चक्रवर्तिनां संदर्शनवेलायामपि भवदंगेषु पर्याप्तं वस्त्रं नाभूत् खलु। वेषे-णाऽनेन लज्जा नाभूत् किम्?" इति।

"कुतो वा लज्जानुभवः? व्रीडायाः अवकाश एव नासीत् किल! आंग्लप्रभोः देहे आपाद-मस्तकं अमूल्यन्यनंतानि परी-धानान्यासन् खलु। न केवलं ममैकस्य, परन्तु अन्येषामनेकेषां तानि धारणपर्याप्तान्यासन्" इति मंदं हसन्तोऽवदन्।

# अरुन्धती प्रदर्शनन्यायः

" अवरः "

अरुन्धती वसिष्ठस्य पत्नी । अरुन्धतीवसिष्ठौ दाम्पत्याय आदर्शप्रायौ । अतः नूतनवधूवरयोः आदर्शदम्पतिप्रदर्शनं आचारप्रसिद्धम् । सप्तर्षिमण्डले उत्तराकाशे वसिष्ठनक्षत्रं विद्योतते, तस्यैव पार्श्वे अतिसूक्ष्मतया किञ्चिन्नक्षत्रं दृश्यादृश्यं लक्ष्यते । तदेव अरुन्धतीनक्षत्रम् । तत्प्रदर्शनार्थं प्रथमं उत्तराकाशं दर्शयति, ततस्तत्रत्यं सप्तर्षिमण्डलं, तत्पश्चात् वसिष्ठं, अन्ते तदन्तिकगतां अरुन्धतीं दर्शयति दर्शकः ।

तद्वत् विज्ञातेन अविज्ञातं, प्रसिद्धेन अप्रसिद्धम् ज्ञातुं ज्ञापयितुं वा यत्र प्रवृत्तिः तत्र अरुन्धतीप्रदर्शन्यायः प्रवर्तते ।

**"अज्ञातं ज्ञातुमिच्छन् हि**
**ज्ञातमाश्रयते बुधः ।**
**अरुन्धतीदर्शनार्थं**
**वसिष्ठं दर्शयेत् यथा ॥**



# उदरदेव तव प्रपूत्यैं

लेखकः श्री बालगणपतिभट्टः, श्रीरङ्गपत्तनम्.

नेता स्वयं किल करोति सुवेदिकासु
मालाविशोभितगलो बहुधा प्रतिज्ञाम् ।
सभ्यैरलङ्कृतसभाकरघोषमध्ये
सर्वं त्विदं ह्युदरदेव तव प्रपूत्यैं ॥

कार्यालयेषु सततं वरपीठरूढः
वाचा वदन्बहुविधानि च सांत्वनानि ।
उत्कोचलाभकरणोत्ककरः प्रभुस्स
सर्वं त्विदं ह्युदरदेव तव प्रपूत्यैं ॥

खण्डाश्ममिश्रितसुतण्डुलरामधान्य-
मुद्गादिविक्रयरतापणिकः पुरीषु ।
तैलं जलेन सह विक्रयणे रतश्च
सर्वं त्विदं ह्युदरदेव तव प्रपूत्यैं ॥

सत्यं तथाऽनृतमयं प्रतिभाविशेषैः
मिथ्यां करोत्यवितथं किल वाक्यकीलः ।
पक्षद्वयेन धनसंग्रहणानुरक्तः
सर्वं त्विदं ह्युदरदेव तव प्रपूत्यैं ॥

सर्वत्र वैद्यनिलयेषु चिकित्सकोऽयम्
वर्णेन रञ्जितजलं हि ददाति जायुम् ।

छिद्रं करोति विकृतस्य च बाहुमूलम्
सर्वं त्विदं ह्युदरदेव तव प्रपूर्त्यै ।।

"पाठान्पठंतु" "समयो नहि चाद्य शिष्याः!"
"अग्रे भवंति सुतरां विशदाः किलैते"
इत्थं हि बोधनरताः खलु वेतनार्ताः
सर्वं त्विदं ह्युदरदेव तव प्रपूर्त्यै ।।

देवाय दत्तघृततैलमधूनि पात्रे
संगृह्य कुक्षिभरणोद्यमदेवलस्तु ।
नीराजनागतधनग्रहणानुरक्तः
सर्वं त्विदं ह्युदरदेव तव प्रपूर्त्यै ।।

भारं महान्तमपि यात्रिकहस्तदत्तम्
शीर्षे वहत्यनुदिनं निभृतं कृशाङ्गः ।
ग्रीष्मेऽथ वृष्टिसमये हिमवातमध्ये
सर्वं त्विदं ह्युदरदेव तव प्रपूर्त्यै ।।



# श्रीसंस्कृतवाणीसार्तनादविज्ञापनात्रिशती

लेखकः श्री माधवचैतन्यभारती स्वामी,
( संस्कृतराष्ट्रभाषासमितिः, वाराणसी. )

[पूर्वानुबन्धः]

ये मां न वेत्त्यत्र स मूकभृत्यवत् प्रताडयमानोऽपि न याचितुं क्षमः।
तथापि तत्सर्वमपि प्रयोजनं विहाय मन्दोऽन्यगिरः पठत्यहो ।।

पुरोऽभिवृद्धिं जिगमिष्यतः शुभा मतिर्मनुष्यस्य भवत्यपि क्षितौ ।
अधोगतिप्रापकहेतुसंभवे सा रावणादेरिव दुष्प्रवृत्तिदा ।।

निरर्थके कर्मणि बालकानां स्वतः प्रवृत्तिर्न तु सार्थके सा ।
अज्ञानिनामेवमिहाप्रवृत्तिः सर्वार्थसंसाधकसंस्कृते हि ।।

मां सारभूतगिरमप्यवधूय लोके
वैज्ञानिकाः कथमिसेऽत्र युगे भवेयुः ?
रम्यां प्रतिष्ठितगिरं पठितुं ह्यशक्ता
भाषाशतं लिपिविभिन्नगति कथं ते ?।।

काठिन्यमारोपयतीह कश्चित् सारल्यवत्यद्य हि संस्कृतेऽपि ।
अभ्यासराहित्यमिहास्ति हेतुः सर्वत्र काठिन्यमतिः प्रसूतौ ।।

प्रयोजनाधिक्यवशेन संस्कृते काठिन्यमङ्गीकरणीयमन्यथा ।
अल्पव्ययप्राप्यमसूरभक्षणं त्यक्त्वा नरो भोजनकृत्कुतो भवेत् ।।

तुल्यं फलं यत्र विभिन्नकर्मणोस्तत्रैव कष्टं च विहाय मानवाः ।
कुर्युर्द्वितीयं सुलभं तदाप्तये महाफले कष्टमपि प्रकुर्वते ।।

स्वप्रान्तभाषाऽन्यजनस्य सर्वदा सर्वात्मना सा कठिनैव वर्तते ।
नाहं तथा; किन्तु समैव भारत-प्रजासमूहस्य मतप्रबोधिका ।।

हिन्दुत्वमार्यत्वमथात्र जैनता श्रीभारतीयत्वतदीयसंस्कृती ।
विना हि गीर्वाणगिरं न सिद्ध्यति जना भवेयुर्हृदयेन वर्जिताः ।।

इहाप्यमुत्रामरवाक्समाश्रये सुखं लभेतात्मविमुक्तिमन्ततः ।
इतः किमन्यज्जगति प्रयोजनं मनुष्यजन्माप्तवतोऽधिकं भवेत् ।।

मुक्तिर्महावाक्यचतुष्टयोत्थित - स्वकीयजीवात्मस्वरूपबोधतः ।
भवेन्न गोस्वामिनिबद्धपद्यकैर्न पोतनाख्यान्ध्रकवीन्द्रवर्णनैः ।।

यदि ह्यहं राष्ट्रवरेण्यशासक - प्रधानभाषा जनताऽपि बाल्यतः ।
अधीत्य मां वार्धकजीवने स्वयं स्वकीयसिद्धांतगिरः पठिष्यति ।।

मदन्यभाषा प्रभुसम्मता यदि तां जीविकार्थं प्रथमं पठेन्नरः ।
स वार्धके मामधिगन्तुमक्षमः कुर्यात्स्वजन्मापि निरर्थकं भुवि ।।

यथाऽऽङ्ग्लभाषामधिगत्य शैशवे तयैव कार्याणि कुटुम्बहेतवे ।
कृत्वा च मां शिक्षितुमक्षमो जनश्चाभारतीयो ह्यभवत्तथाऽग्रिमः ।।

मातामहीव सदया निजमातृभाषाः
पुष्णाम्यहं प्रतिदिनं निजशब्ददानात् ।
नैतत्स्मरन्ति शिशवोऽद्य मदिष्टसेवां
नेच्छन्ति कर्तुमपि नूनमिमे कृतघ्नाः ।।

सर्वोच्चराष्ट्रपतितोऽधमभृत्यवर्ग-
पर्यन्तमप्यमरसंस्कृतवाक्स्थितानि ।
सम्बोधयन्ति सततं भुवि किन्तु देश-
भाषापदानि मनुतेऽज्ञजनश्च तानि ।।

नवीनयन्त्रावयवादिबोधका न सन्ति शब्दा मयि संस्कृतेऽधुना ।
पूर्वं हि मन्त्रादिबलेन निर्मितं यन्त्रादिकं नावयवादियोगतः ॥

सा मन्त्रशक्तिर्भुवि नास्ति साम्प्रतं शब्दार्थयोरप्यनृतप्रभाषणात् ।
शब्दानृतं प्रान्तवचः प्रभाषणं वस्त्वन्यथा भाषणमर्थगोचरम् ॥

कुमारिलेनापि हि तन्त्रवार्तिके प्रोक्तं च शब्दानृतमप्यशेषतः ।
त्यक्तव्यमर्थानृतवत्सदा बुधैः सङ्कल्पमात्रेष्टफलेप्सुभिः क्षितौ ॥

तदस्तु सम्प्रत्यनुवर्तते यन्नवीनयन्त्रावयादिशब्दः ।
किं संस्कृतेऽन्यः परिकल्पनीयो भाषान्तरात्पूर्वतनग्रहो वा ॥

शब्दान्तरं संस्कृतधातुभिर्यदि प्रकल्पितं चेन्न हि तत्सुबोधकम् ।
तद्बोधनायापि पुनः प्रकोष्ठके तत्प्राक्तनं नाम सदा गतिर्भवेत् ॥

तस्मादिहार्यैः पिकनेमशब्दवन्म्लेच्छप्रयोगोऽप्यनुवर्तनीयः ।
मीमांसकैरप्यनुमन्यते तच्छब्दार्थयोः कल्पनवर्ज्यभेदः ॥

पिकादिशब्दस्य न कल्पनीयमर्थान्तरं किन्त्वबुधप्रसिद्धम् ।
ग्राह्यं त्विति श्रौतनयप्रवीणा ब्रुवन्ति तत्रात्ममताविरोधात् ॥

मया तु शब्दान्तरमत्र नूतनं न कल्पनीयं नवयन्त्रबोधकम ।
किन्तु प्रसिद्धं यदिहान्यकल्पितं तदेव संग्राह्यमिति प्रबोध्यते ॥

डित्थादिशब्दान् स्वसुतादिबोधने प्रयुज्यमानानितरेऽपि संस्कृते ।
विभक्तिसंयोजनपूर्वकं बुधाः प्रयुञ्जते न त्वितरान् प्रकुर्वते ॥

तथैव यन्त्रं सृजताऽपि नूतनं तद्बोधकं चापि पदं विनिर्मितम् ।
तदेव चान्यैरविकारपूर्वकं प्रयुज्यतां संस्कृतवाचि साम्प्रतम् ॥

तस्यार्थवत्वेन च पाणिनेः स्या-
द्विभक्तिसंयोजनयोग्यसंज्ञा (प्रतिपादिकसंज्ञा) ।

तस्माज्जनैः सप्तविभक्तियुक्त-
तन्नामभिर्वाक्यमिह प्रयुज्यताम् ॥

यदत्र शिष्टैरितरत्पदं मयि तदीयवाक्यं च न सम्प्रयुज्यते ।
तद्धीह तुच्छत्वधियैव केवलं तद्बोधके संस्कृतगे पदे सति ॥

लोके हि पूज्यसुजनोक्तगिरं तदन्ये
संभाषणादिषु सदा समुदाहरन्ति ।
न त्वन्यभाषितमुपाददते च पूज्या-
स्तद्वत्स्वदेशपदसंस्कृतशब्दरीतिः ॥

भाषेति नाम्ना द्विविधैव लोके वागुच्यते लौकिकवैदिकाख्या ।
हिन्द्यादिशब्देन निगद्यमाना भाषैव न स्याद्भुवि किन्तु भासा ॥

यथैव सूर्यः परमात्मभासा स्याद्भास्करो न स्वत एव तद्वत् ।
गीर्वाणवाणीपदजालयोगाद्भाषापदार्हा भवतीह हिन्दी ॥

सर्वेषु कोशेष्वमरादिनामसु
भाषापदेनाप्यहमेव संस्कृता ।
प्रोक्ता न हिन्दी न च वाऽन्यदेशगा
कथं वराक्योऽद्य यदाह्वयं त्वियुः ॥

आङ्ग्लेयादिविदेशशिष्टिसमये देशीयराजादिभिः
पुण्योपार्जनबुद्धिभिः स्वभवने समान्यतो रक्षिता ।
किन्त्वेतेऽद्य पदच्युताः सकलतद्राष्ट्राधिपश्चैकलः
यद्यस्मान्न भवेत्समुन्नतिरितः किं वा शरण्यं मम ॥

त्यक्त्वा मां रुदतीं निराश्रयतया लोकाः प्रशंसापराः
प्रत्यब्दं बहुवित्तनाशकसभाः कुर्वन्ति किं तेन मे ?
गेहे पीडितमातरं प्रति सुताः सेवां विहायादरम्
तच्छ्लाघास्तुतिकालयापनपरा मात्रे तु कुर्वन्ति किम् ? ॥

(अनुवर्तते)

# इन्दिराविजयविमर्शनम्

ले. राधा, नेल्लूरु

संस्कृतवाङमये चारित्रिककाव्यानि अनतिसंख्याकान्येव दृश्यन्ते । भारतीयकवयः अलौकिकाह्लादजनकत्वमेव काव्यस्य परमप्रयोजनत्वेन मन्यमानाः दत्तातिशयोक्तिप्रधानाः व्यङ्ग्यलक्षणादिवृत्त्याश्रिता आसन् । अत एव संघटनस्य यथातथं चित्रणं परित्यज्य स्वीयभावनाशक्त्या अनन्यसामान्यभावकुसुमान्युत्पाद्य पाठकान् रञ्जयामासु । अन्यच्च– यस्य कस्यापि राज्ञः आस्थाने स्थिताः तेन समादृताः तत्पोषणाश्रिताश्च तत्कीर्तिपराक्रमादिगुणगणसम्पद्वर्णनरताः वृत्तस्य यथातथवर्णनं परितत्यजुः । अस्माकं पुराणेतिहासादिष्वपि सहजचरित्रचित्रणासक्तिः विलुप्ता । अत एव संस्कृतवाङमये चारित्रकविषयप्रधानानि अधिकसंख्याकानि न सन्ति । तथापि हर्षचरितादीनि कानिचन काव्यानि चारित्रिकानि सन्त्येव । तथाहि–

सप्तमशताब्दे बाणभट्टविरचितं श्रीहर्षचरितम्, पद्मगुप्तविरचितं नवसाहसाङ्कचरितम्, बिल्हणविरचितं विक्रमांकदेवचरितम्, कल्हणविरचिता राजतरङ्गिणी इत्यादीन्येव संस्कृतवाङमये चारित्रककाव्यानि ।

आधुनिके काले संस्कृतकाव्यानि न बहुलप्रचारं लभन्ते । अत एव काव्यानां तत्कर्तॄणां च विरलता इव दृश्यते । तथापि कैश्चन कविपण्डितैः संस्कृतकाव्यानि विरच्यमानान्येव भवन्ति ।

किन्तु नाटकोत्पत्ति अल्पा एव । तत्रापि चारित्रककाव्याना-मुत्पत्तिः ततोऽप्यल्पतर एवेति वक्तुं शक्यते ।

**"इन्दिराविजयम्"** अस्मिन्नेव वत्सरे प्रकटितं संस्कृतचारित्रकनाटकम् । गीताविज्ञानान्ध्रकलाशालाप्राध्यापकेन (नल्गोण्ड) श्रीअम्बटिपूडि वेंकटरत्नार्येण विरचितमिदं नाटकम् ।

सर्वे वयं जानीमः अचिरात् प्रागेव कीदृशः बीभत्सकाण्डः बांग्लादेशे स्वीकृतस्थानोऽभवत् । बांग्लादेशस्य धैर्यशौर्यादिगुणाः केन वा प्रकारेण प्रदर्शिताः इति जानीमः । पाकवाहिनीकृतघोर-कृत्यान्यपि अस्माभिः ज्ञातपूर्वाणि । बांग्लादेशविमुक्तौ भारतीयानां दीक्षापि विदितपूर्वैव । अस्माकं देशप्रजानां त्यागौदार्ये अपि सुप्रदर्शिते । मुक्तिवाहिनी भारतसेनासाहाय्येन स्वातंत्र्यमलभत । एतादृशवीररौद्रबीभत्सादिरससम्मिलिता कथा बांग्लादेशे अचिरादेव प्राक् समभवत् । तामेव कथां स्वीकृत्य विरचितं इन्दिराविजयनाटकम् ।

संस्कृतनाटककर्तॄणां सर्वात्मना अभावप्राये आधुनिककाले अयं प्रशंसनीयः इन्दिराविजयनाटककर्ता ।

तन्नाटकमधिकृत्य किञ्चित् ज्ञास्यामः । नाटकमिदं अङ्क-पञ्चकसमुपेतम् । प्राचीननाटककर्त्रनुसारेण अनेनापि आदौ नान्दी प्रोक्ता ।

**सृष्टिस्थितिलयातीता**
**परा शक्तिः कृपामयी ।**
**दुष्टसंहारनिपुणा**
**त्रायाद्वो विजयेन्दिरा ॥**

इति नान्दीं कृत्वा आरब्धवान् नाटकमिदम् । अत्र अष्टपदानि सन्ति । **"त्रायाद्वो विजयेन्दिरा"** इति कथयता अनेन शब्दतः अर्थतश्च इन्दिरायाः प्राशस्त्यं निरूपितम् । अत्र श्रीमती इन्दिरा

पराशक्तिस्वरूपिणी एवेति कवेरभिप्रायः । अत एव इन्दिरायां विजयेन्दिरात्वं पराशक्तित्वं च समारोपितम् । **"दुष्टसंहारनिपुणा कृपामयी"** इत्यनेन काव्यार्थसूचनमपि कविनात्र कृतम् ।

याह्याखानेन मुजीबः बन्धनं, निराश्रितानां आर्तानां च प्रजानां इन्दिरया आश्रयदानं, पाक् सैनिकानां दुष्कृत्यवर्णनम्, मुजिब् हननाय याह्यादीनां दुरालोचनम्, एकेन भटेन तस्य विमुक्तीकरणम्, बांग्लायाः स्वातन्त्र्यसम्पादनम्, पुनः मुजीबः आगमनं इति संक्षेपतः अत्र कथाविषयः ।

कविना अनेन सर्वत्र फलस्य दैवायत्तत्वं निरूपितम् । सर्वत्र उपनिषद्वाक्यानि, भगवद्गीतावाक्यानि च उदाहृतानि । इन्दिरादत्ताश्रयेण केनचन वृद्धेन तस्याः प्रशंसनमपि अनेनैव पथा कृतम् ।

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥**
**परित्राणाय साधूनां विनाशाय च दुष्कृतां ।**
**धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥** (भगवद्गीता)

अत्र इन्दिरायां ईश्वरीत्वमारोपितम् । **"ये यथा मां प्रपद्यन्ते तां स्तथैव भजाम्यहम्"** इति इन्दिरां तत्स्वरूपागतां विष्णुमेव अचीकटत् अयं कविः ।

कारागारबद्धस्य मुजीबः चिन्तने अपि फलस्य दैवायत्तत्वं एव निरूपितम् । तथाहि–

लौकिकजीवनं निरन्तरं संकुलम् । एकान्तप्रदेशेऽस्मि । एपोऽवकाशः दुर्लभो जनानाम् । एतादृशीं शान्तिमभिलषन्तः मुनीश्वराः तपोवनं गच्छन्ति इत्यादि ।

स्वमातृदेशविमुक्तिसंग्रामे प्रकटितधैर्यसाहसेन मुजीबेन एवं रीत्या चिन्तनं नात्यन्तोचितम् । एवं रीत्या सर्वत्र नाटके सर्वपात्राणां उपनिषद्वाक्य - भगवद्गीतावाक्यप्रामाण्येन संभाषणं कविना कल्पितम् । तच्चिन्त्यम्–

अस्तु नाम भगवद्गीतायाः उपनिषदां च धर्मप्रबोधकता, तस्मिन् विषये न कस्यापि संशयबुद्धिः । किन्तु इन्दिराविजय-नाटककथा वीररौद्रबीभत्सरसप्रधानाऽस्ति । पाक्सैनिकानां दुष्कृत्यवर्णने वा, मूजीबादीनां शौर्यधैर्यवर्णने वा कृतदीक्षाणां तेषां संभाषणसमये वा न कुत्रापि वीरादिरसानुभूतिः दृश्यते । किन्तु सर्वत्र "**सर्वं मिथ्या**" इति वाक्यानुभूतिरेव भवति । वीररसो-द्बोधकं वाक्यं वा श्लोको वा न दृश्यते । प्रतिपादितपूर्वं कारागारे मुजीबः आलोचनमपि । वीरादिरसप्रधानमितिवृत्तं स्वीकृत्य शान्तरसप्राधान्येन नाटकरचनं न सर्वजनमनोरञ्जकम् । अस्तु नाम सर्वस्य दैवाधीनत्वम् । तथापि बहुबलिकाण्डनिरूपितबीभत्स-प्रधानेतिवृत्तं । बहुशौर्यकार्यप्रदर्शितवीररसप्रधानेतिवृत्तम्, रोषपोषणपरिमिलितरौद्ररसप्रधानेतिवृत्तं च स्वीकृत्य तस्मिन् पूर्वोक्तिरीत्या केवलतात्विकदृष्टचा मिथ्यवादकल्पनम् न सर्वाह्लादकम् । सामान्यविषये अभीष्टविषयविवरणं अस्तु । किन्तु नाटक-विषये कविना रसपोषणासक्तेन भाव्यम् । इतिवृत्तानुसारेण प्रधानरसस्वीकरणमपि कार्यम् ।

तथापि एवंरीत्या चारित्रककथाभागचित्रणेन बहुधा प्रशंसनीयोयं कविः । न चास्ति कोऽपि आधुनिककाले एतादृश-नाटककर्ता । कतिपयशताब्दयनन्तरं संस्कृतवाङ्मये सामान्य-चरित्रचित्रणोदितं नाटकमिदमेव भवेत् । एवंरीत्या अस्य लेखिन्या नाटकान्तराण्यपि प्रादुर्भवेयुः इत्याशासे ॥



# श्रीवेंकटेशशतकम्

## पैत्तंबाडि महाकवि व. रामानुजाचार्यविरचितम्
(पूर्वानुबन्धः)

कलशोदधिरत्नमण्टपे त्वं सततं भासि भुजङ्गराजतल्पे ।
शयितो ह्यनिरुद्धनामधेयोऽसकृदार्तजशिवादिदेववन्द्यः ॥

तस्याश्शिखाया इति सूक्त उक्तस्त्वमेव संप्रेरयसीह सर्वान् ।
जीवेषु सर्वेष्वपि चान्तरन्तर्यामीति तिष्ठन्निजकर्मवर्गे ॥

योगिभिर्हृदयांभोजे ह्यन्तर्यामिस्वरूपतः ।
ध्येयं त्वामेव पश्यामि शेषशैलशिरोमणे ॥

### इति परत्वादिदशकम् – ५



### अथ विभवावतारदशकम् – ६

विरिञ्चतो वेदहरासुरान् त्वं मस्त्याकृतिश्शेषगिरीश हत्वा ।
पुनश्च धात्रे समुपादिशो हि ज्ञानस्वरूपी हयवक्त्रनामा ॥

क्षीरसिन्धुमथनाय मन्दरं देवदानववृतोऽवहद्भवान् ।
कामठेन वपुषा स्वपृष्ठतो वेङ्कटाचलपते महागिरिम् ॥

हत्वा हिरण्याक्षमिमं धरित्रीं समुद्रमग्नं दनुजं निहत्य ।
मुस्तामिवादाय हि दंष्ट्रया त्वं भूदाररूप्यप्यचलामरक्षः ॥

भक्तावनाय नरसिंहवपुर्धरस्त्वं
स्तंभात् हिरण्यकशिपुं दनुजं च हत्वा ।
प्रह्लादमस्य तनयं समरक्ष उग्र-
रूपस्व भक्तमतिघोरसटाच्छटाभिः ।।

लब्ध्वा बलौ वज्रिपदस्पृहे त्रिपादक्ष्मां वामनरूपतस्त्वम् ।
त्रिविक्रमाकारधरोऽकरो हि पादेन पातालतले तमेतम् ।।

भूत्वा भुवो भार्गवरामरूपी भारापनुत्यै जमदग्निसूनुः ।
परश्वथाहारमकल्पयस्त्वं त्रिस्सप्तकृत्वः खलु राजवंशम् ।।

ततोऽवतीर्योष्णमरीचिवंशे दशाननादीनसृपान्निहत्य ।
श्रीराघवस्त्वं शरणागतानां रक्षाख्यधर्मं समपालयो हि ।।

ततोऽवतीर्य द्विजराजवंशे कृष्णाग्रजस्त्वं बलरामनामा ।
हलं कराभ्यां मुसलं च बिभ्रन् प्रलंबमुख्यानबधीर्हि दैत्यान् ।।

त्वमेव सारथ्यमिषेण कृष्णः प्राप्ते मृधे कौरवपांडवानाम् ।
अद्यापि मादृग्जनरक्षणार्थं पार्थाय गीतां समुपादिशो हि ।।

कलौ युगेऽस्मिन्नपि कल्मषे त्वं फलं दिशन् सर्वजनेष्टमन्ते ।
संस्थापयिष्यस्यशुभान्निगृह्य कल्कयाख्यकः कार्तयुगं हि धर्मम् ।।

**इति विभवावतारदशकम् – ६**

---

**अथ अर्चावतारदशकम् – ७**

अष्टोत्तरशतदिव्याष्टाभिव्यक्तिस्थलेषु चाद्ये त्वम् ।
मादृग्जनावनार्थं श्रीरंगेऽभूस्स्थले हि रंगेश ।।

श्रीमुष्णनाम्ना महितेऽघमुष्णे मुक्त्यन्तदाश्वत्थतरुत्रयेड्ये ।
क्षेत्रेऽभवो भूकिटिरूपधारी त्वमेव भक्तावनजागरूकः ।।

हस्तिभूधरगुहोर्ध्वभागयोस्तं नृसिंहवरदाभिधां वहन् ।
भासि वांछितफलानि नो दिशन् वेङ्कटाचलपतेऽर्थिकल्पकः ।।

(अनुवर्तते)

# निधेहि पदं

(गूढलेखिन्याः)

निष्कास्य भयं उत्थाप्य पदं साहसिकं ।
सोत्साहं कुरु उद्योगं, निधेहि पदं निधेहि पधं ।।

निजभवनद्वारमपावृणु करिष्यति स्वर्णभानुः शेषं ।
नि शेषं किरणैर्गृहगततिमिरं द्रक्ष्यसि सुंदरमरुणमुदितं ।। निधेहि ।।

प्रतिभामयहृदये स्वे वीक्षिष्यसे उद्भूतं तेजः, साहसहास्यदयादियुतं ।
हिरण्यज्योतिष्मन्तं, स्वजनानन्दप्रदं कुरु उद्योगं ।। ।। निधेहि ।।

प्रतिभावतां नराणां नास्ति हि किमप्यसाध्यं ।
सोत्साहानामेतदवधारय कुरु उद्योगं ।। ।। निधेहि ।।

निजप्रतिभायाः उपयोगं अन्यत्रापि हि कर्तुं यतितव्यं ।
एतत् किंचित् कठिनं कार्यं ।। ।। निधेहि ।।

नव - उन्मेषोधिकदृढता विवेक - ज्ञानं ।
सम्यग्मिश्रणमेतद्भवति हि परिणामे यशोरूपं ।। ।। निधेहि ।।

निर्झरजलवत्प्रतिभाधारां ते कलयस्व विज्ञानोद्यम - संस्कृतिकरणे ।
नवराष्ट्रोत्थानाधारप्रदं, संस्कृतशिक्षकोन्नतिकरं ।। ।। निधेहि ।।

निश्चितपूर्वसुयोजित - विधिना कार्ये आरब्धे ।
यदशकं तद्भवति हि सुसकं एतत्सर्वैर्दृष्टं ।। ।। निधेहि ।।

नीतिशक्तियुक्तिमयः 'यत्नो हि मुख्यो देवः ज्ञेय' इत्येतत्संतोक्तं ।
निजैःश्वेतैःकेशैः किं विस्मारितमतिभीषयद्भिर्यत्प्राप्तं ते वार्धक्यं?

नित्यं विवर्धमानै कलहैर्वा मूल्यैर्वा विस्मारितमतिभीषयद्भिर्यत् ।
प्राप्तमेतत्कलेर्युगं ? निष्कास्य भयं कुरु उद्योगं ।। ।। निधेहि ।।

निर्गतकामादिकषष्टयब्दे उत्पद्यति नवतारुण्यं ।
यद्बहुजनहितकार्ये तद्बहुभिर्भणितं, सोत्साहं कुरु उद्योगं ।। निधेहि ।।

निरन्तरस्नेहारोपित संस्कृतरक्षणरूपिण्यै वटशाखायै ।
दत्त्वा उचितं जलमुर्वरकम् कुरु तस्य श्राद्धं ।। ।। निधेहि ।।

निजवार्धक्येऽपि छायाप्रदछत्रसमं,
इतरेषामपि, वर्धयस्व वटवृक्षं ।। ।। निधेहि ।।

क्लिष्टं मृतं निरुपयोगीति संस्कृतं निंदंतु विरोधकाः बहवः ।
गैर्वाणीप्रसारकास्तु 'ऋणं कृत्वाऽपि' उत्थापयितुं उद्यताः बृहन्तः ।।

बहुधा हि दोषाः 'धन' सन्निपाते
गुणायन्ते चंद्राभायां शशत्वं यथाऽङ्काः ।
काश्चित्तु विसंगतयः 'सेवा' निकषे
निमज्जिष्यंति आंग्ल्याः बट्-पुटादित्रुटयो यथा ॥

अनेकानि छिद्राणि 'हिरण्यवह्नौ' ।
भस्मीभवन्ति काष्ठानि यथाऽर्द्राणि समिद्धे ।।
प्रतिगामिताऽभ्राणां वै भास्वत्प्रकाशे ।
न दृश्यन्ते शुभ्रतेजसि यथा रवि-अङ्काः न दृष्टाः ।।



# स्वातंत्र्योद्यमे श्री अरविन्दः

लेखकः- श्री डॉ. श्रीनिवास दीक्षितः

शोभनोऽयं स्वातंत्र्यरजतोत्सववत्सरः। स्वातंत्र्यं प्राप्य सर्वेऽपि वयं आनन्दपरिफुल्लमनस्काः भवामः इति विषयस्य कारणं गान्धी - नेहृ - अरविन्द - प्रमुखमहोदयानां कृषिफलितमेव, न त्वन्यत् । एतत्स्वातंत्र्यसम्पादनाय झांसीलक्ष्मीबाई, बहदूर षा प्रभृतयः विप्लववीरकेसरिणः, बालगंगाधरतिलक्, गोखले प्रभृतयः वीरयोधाः स्वात्मीयं सर्वमपि धनं भारतमातृदेव्याः पादयोः समार्पयन् ।

मोतीलाल् नेहृ, वल्लभाई पटेल्, महदेवदेशाय्, जवाहरलाल्, लोहिया, रामानन्द प्रभृतयः महानुभावाः एतत्स्वातंत्र्यसम्पादनाय हूणसाम्राज्यमूलस्तम्भानचालयन् । दरिद्रनारायणः गान्धीमहोदयः चक्रकं धृत्वा अहिंसायुद्धेन सत्याग्रहसमरशंखारावेण पाश्चात्यदेशान् भयभीतानकरोत् । तदा दरिद्रनारायणं तं गान्धीमहात्मानं एव मस्तुवन् –

**श्रीमद्भारतमातरं भगवतीं धर्मोज्झितां तापसीम्,**
**पातुं मोहनगान्धिरर्धवसनः प्रादुर्बभूव स्वभूः ।**
**सव्ये शंखहलं करे धरति यः सव्येतरे चक्रकं,**
**भूचन्द्रार्कसमद्युतिध्वजमहावस्त्रान्नसद्धर्मदः ।। इति ।**

नेताजी सुभाश्चन्द्रबोसमहाशयः "जैहिन्द्" निनादेन महावीरान् सृष्ट्वा, भारतजातीयप्रभुत्वं स्थापित्वा वीरसिंहोऽभूत् । "वंदे मातरमिति" निनदन्, गर्जन्, भारतजातिः ऐकमत्येन महानदीव प्रावहत् । नदीप्रवाहः अतीव बलवत्तरः खलु । अतः दास्यश्रुंखलाः अतृटयन्त । स्वातंत्र्यमवततार ।

स्वातंत्र्योद्यमे विप्लवयोगिनः श्री अरविन्दस्य स्थानमालोचयामः । श्री अरविन्दः कारणजन्मा । ऋषीणामग्रणीः बंकिचन्द्रः । योगिनां मूर्धन्यः महायोगी श्री अरविन्दः । ऋषिः बंकिचन्द्रः "वन्देमातरमिति" गीतिकां १८६४ वत्सरे अरचयत् । किन्तु, तदा नहि जनामोदकरी सा गीतिका । किन्तु १९०७ संवत्सरे भारतीयानुत्थाप्य, उत्साहवतः कृत्वा, मनोमांद्यं प्रक्षाल्य, जातिजीवनस्य मार्गमुपदिदेश सा गीतिकैव । भविष्यत्कालिकविषयाः प्रथमतः ऋषीणामेव गोचराः भवन्ति । अत एव ऋषि बंकिचन्द्रः आनन्दमठनामकनवलायां तां गीतिकां १८६४ संवत्सरे एव व्यबध्नात् ।

श्री अरविन्दः १८७२ वत्सरे आगस्ट् १५ दिनाङ्के सुवर्नभूतायां वंगभूम्यां प्रादुर्बभूव । आगस्ट् १५ दिनाङ्के एव एसुक्रीस्तोः मातरं मेरीकन्यां देवताः स्वर्गं प्रतिनिन्युरिति क्रैस्तवानामाशयः । एतस्मिन् दिने एव श्रीरामकृष्णः समाधिगतोऽभूत् । अनेकविशेषसमन्वितेऽस्मिन् आगस्ट् १५ दिवसे समजनि श्री अरविन्दः । पिता कृष्णधनघोष् । श्री अरविन्दस्य पिता कृष्णधनघोषः पाश्चात्यव्यामोहपीडितः । अत एव श्री अरविन्दस्य अध्ययनाय तं डार्जिलिङ्गं प्रेषयति स्म ।

अत एव श्री अरविन्दः बाल्यात्प्रभृति आंग्लवातावरणे एव अवसत् । तस्य शैशवादारभ्य विद्याभ्यासः " डार्जिलिङ्ग् " कान्वेन्ट् पाठशालायामभूत् । ततः इंग्लण्ड्नगरे विद्यामभ्यस्य "ट्रैपास्" परीक्षायां प्रथमश्रेण्यां समुत्तीर्णः । एकविंशतिवर्षदेशीयः स्वदेशमानीतः श्री अरविन्दः । तदा अत्र परिस्थितयः, हूणानां निरंकुशत्वपरिपालनं च अरविन्दस्य मानसफलके मुद्रिता अभूवन् । देशमातुः दास्यबंधान् त्रोटयितुं बद्धकङ्कणोऽभूत् । अतः मातृभाषाया

स्वरूपं, संस्कृतिञ्च ज्ञातुं प्रयत्नमकरोत्। मधुसूदनदत्तः बंकिंचन्द्रस्य च रचनाः पठयामास। विद्याभ्यासकाले एव पाश्चात्यसंस्कृतिः केवला भौतिकी इति मतिः इंग्लंड् - नगरे अध्ययनकाले एव अस्य अभवत्। तत एव आध्यात्मिकता अपि प्रवृद्धा। अचिरादेव "दिनेन्द्रकुमारराय्" सहायेन वंगभाषायां परिणतिमलभत। रचनायामपि पाटवमलभत। किन्तु वंगभाषासाहित्यमपारमपि, भारतात्मानं नहि दर्शयति, नहि समर्था इति मत्वा सर्वभाषाणां मूलभूतां, देवभाषां संस्कृतभाषां पठितुं प्रवृत्तः।

कालिदासभवभूत्योः वाल्मीकिव्यासादीनां काव्यानि पपाठ। ततः अरविन्दः तेषां ग्रंथान् आंग्लभाषायामनूदितवान्। सावित्र्युपाख्यानाधारेण "सावित्री" नामकं महाकाव्यमरचत् श्री अरविन्दः। शास्त्रग्रंथान्यपठत्, उपनिषदः, भगवद्गीतां च पपाठ सः।

ततः कार्यरङ्गे प्रवेशितः। प्रथमतः कांग्रेस् संस्थायां स्थितान् दुर्नयान् "जीरो" नामधेयेन प्रकटीचकार। ततः पाश्चात्यदेशेष्विव रहस्यविप्लवसंस्थानः संस्थाप्य स्वातंत्र्यसमुपार्जनं कर्तव्यमिति निर्णीय बरोडायां विप्लवसंस्थया सह उवास। किन्तु, अरविन्दस्य राजकीयानां आध्यात्मिकशक्तिरेव मूलभूता।

भारतदेशसंस्कृत्यनुसारेण श्री अरविन्दः नवविंशतितमे वत्सरे भाग्यमतीं मृणालिनीदेवीं परिणीय गार्हस्थ्यं स्वीचकार। किन्तु तयोर्दाम्पत्यं न ह्यानन्दकरम्। सा निरहंकारिणी, निस्स्वार्था च। अरविन्दविकासाय मृणाळिनी सहकारः अत्यवसरः एव।

१९०५ संवत्सरे अक्टोबर् १६ दिनाङ्के वंगदेशविभजनशासनं प्रवेशितम्। वंगदेशीयाः प्रतिघटन्ते स्म। तस्मिन् समये एव श्री अरविन्दः "वन्दे मातरम्" पत्रिकायाः प्रधानसम्पादकपदवीं स्वीकृत्य, भारतीयानुत्तेजयमास। वन्देमातरमिति मंत्रमुपादिशत्

बंकिचन्द्रः । तदर्थं व्याचचक्षे श्री अरविन्दः= भारतमाता नहि केवला नदीपर्वतारण्यस्वरूपा जडा । प्रपञ्चस्यैव परमोपदेशकरी पराशक्तिः" इति उज्जुघोष ।

पत्रिकाद्वारा श्री अरविन्दविप्लवसाहित्यं दृष्ट्वा पालकाः तं कारागारे चिक्षिपुः । आलीपूर्हत्याभियोगे श्री अरविन्दं कारागारे अपातयन् पालकाः । ततः श्री अरविन्दः निर्दोषीति ज्ञात्वा उत्सृजन् । कारागाराद्बहिरागतः सः योगाभ्यासेन मुक्ति प्राप्तुं निश्चक्रे । राजकीयकार्यक्रमानुत्ससर्ज । तस्य राजकीयनिष्क्रमणानन्तरं गान्धीमहाशयः कांग्रेस् संस्थायाः निर्वाहकोऽभूत् । १९१० वत्सरे प्रमुखनायकाः पुदुच्चेरीं प्राप्य अरविन्दं अपृच्छन् । तदा तेन प्रदत्तः सन्देशः "धर्म" नाम्नि तमिलपत्रिकायां प्रकटीकृतः ।

"भारतदेशस्य स्वातंत्र्यसिद्धिः अचिरादेव भविष्यति । किन्तु स्वातंत्र्यानन्तरं देशीयक्षुद्रशक्तयः बहिर्गत्वा विकटाट्टहासं करिष्यन्ति । तदा स्वातंत्र्यं निरर्थकं भवति । तन्निवारणोपायं मम पद्धत्या साधयामीति" ।

ततः सन्यासाश्रमं स्वीकृत्य योगाभ्यासमारभते स्म । तदा फ्रेंच् विदुषी श्री मीरा तस्य अन्तेवासिनी अभूत् । १९२६ संवत्सरे श्री अरविन्दस्य योगसाधने अनिर्वाच्यं अन्तर्घटनमभवत् । तस्य महानुभावस्य शतजयंत्युत्सववत्सरोऽयम् । पुदुच्चेरी पुर्यां श्री अरविन्दविश्वविद्यालयः अद्यापि विराजते ।



# बुद्धिः शिक्षिता बकस्य

लेखिका– सु. विशालाक्षी

कदाचित् कस्मिंश्चित् सरसस्तीरे बकः कश्चित् बृहन्मीनग्रहणार्थं पदेनैकेन चिरेणातिष्ठत् । तदानीं तेन पथा बहवः मत्स्यशिशवः बकमतिक्रम्य अधावन् । तेषु मध्ये शकुलार्भकः कश्चित् तिष्ठन्तं तं संबोध्य अपृच्छत्, "हे बक ! त्वं तु मत्पूर्वजान् महतः मीनानेव अपहृत्य भक्षयसि, परन्तु मत्सदृशान् क्षुद्राण्डमत्स्यान् न कदापि अपहरसि । किं तस्य कारणम्?" इति । बक एवं प्रत्यवदत् "हे गण्डक ! श्रुणु त्वत्सदृशाः अतीवाल्पाः भवन्ति । मदीयक्षुच्छान्तये नालं ते । अतः बहून् युष्मान् खादेयम् चेत् तेन महत्पापं भवेन्मम । एकेनैव बृहन्मीनग्रहणेन न तादृशं पापं मम भवेत् । अत एवाहं शकुलार्भकान् न गृह्णामि" इति ।

"आः ! महदाश्चर्यमिदम् । किमीश्वरः सकृपां बुद्धिमपि तेऽदाद्वा ?" इति भणित्वा शकुलार्भकाः सर्वे परत्र अधावन् । परन्तु एकस्य तत्र संशयः अजायत । सहसा स बकसमीपं प्रत्यागत्य पुनरपि तमपृच्छत् "भो बक, मद्गुरः नागयिष्यति चेत् किं कुर्याः ?" इति । तच्छ्रुत्वा बक एवमचिन्तयत्– "तथ्यमेवैतत् । इदानीं नागमिष्यति चेत् मद्गुरः, किं कुर्याम् ?" इति झटिति स बुद्धिमान् बकः शकुलार्भकं गृहीत्वा अगिलन् ।



# मातर्मां पाहि सर्वदा

लेखकः– श्री ना. व. निगमान्तम्, प्रोद्दुटूरु.

मातर्मामकमानसं मधुरिपुध्याने विधूतादरं
मारेषुक्षुभितं मदार्तमसकृत्पापे प्रवृत्तं चलम् ।
मन्थानाचलमन्थमाविलपयोराश्युद्भवे मे रमे
मायोन्मूलनचुञ्चुभिः कुरु कृपापूरैः सदा निर्मलम् ॥
मातर्मामव वैदिकोक्तिबिमुखं वित्तार्जने तत्परं
संसारार्णवपातितं गुणगणैरिक्तं जडं निर्दयम् ।
त्वद्भक्त्या रहितं प्रमुग्धमनसं दुस्सङ्गदुर्मेधसं
दारिद्र्यैकनिधिं दयामयि जगन्नाथप्रिये सिन्धुजे ॥
मातर्मङ्गलदेवते कुमतिभिश्चाटूक्तिसंवादिभिः
नीतं मार्गमधर्मदूषितमिमं भोगातुरं घातुकम् ।
भक्तानुग्रहकारिणि त्रिभुवनीसंस्तूयमाने जनं
लोकाह्लादिनि दीनरक्षणपरे पाहि द्रुतं बालिशम् ॥
मातः पालय मां सरोजभवने गीर्वाणसंसेविते
सम्पद्दायिनि विश्वमङ्गलकरि श्रीवासवक्षःस्थिते ।
तारुण्यादिमदान्धमन्तकभयात्त्वत्पादपद्माश्रितं
पश्चात्तप्तमनन्तशायिललने पापं घृणारूपिणि ॥
मातर्मान्यसुपूजितेऽब्जसहजे हेमप्रभे श्रीप्रदे
लोकोऽयं क्षणिको धनं च तरलं कान्तादयोप्यस्थिराः ।
नित्यं सत्यमनिन्दितं तव पदं मुक्तिप्रदं देहिना–
मित्यालोच्य मुहुः यतन्तमनघे त्वत्पादपद्मेऽव माम् ॥
मुदाकरीं मुनीडिते मुरारिनारि सुप्रभे
विभूतिदायिनि श्रियं बिहङ्गवाहनप्रिये ।
शुभप्रदे त्वदङ्घ्रिपद्मसेविने प्रयच्छ मे
भवाब्धितारिके दरिद्रतानिपीडिताय मे ॥

# दद्यान्नश्चिरजीवनम्

**लेखकः श्री बालगणपतिभट्टः, श्रीरंगपत्तनम्.**

अश्वत्थामा बलिर्व्यासः हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥

माता यस्य कृपिस्तथा च जनको द्रोणस्तु कुंभोद्भवो
ह्यश्वस्येव चकार जन्मसमये हेषारवं योऽद्भुतम् ।
यश्शम्भुं परितोष्य दीर्घतपसा लेभे च तेजः परम्
दद्यान्नश्चिरजीवनं सुखकरं **द्रौणिस्तु** रुद्रांशजः ॥

शुक्राचार्यकृपामवाप्य सहसा लब्धश्च संजीवनम्
यः खर्वस्य हरेः पुरश्च भुवनं दत्वा शिरोऽनामयत् ।
लोकेऽशास्त्रकृतन्तु कर्म खलु ते दिव्यं फलं यच्छतु
हीत्थं विष्णुवरं समाप्य **बलिराट्** दद्याच्चिरं जीवनम् ॥

**व्यास**स्सत्यवतीसुतो हि भगवान्द्वैपायनस्सूत्रकृत्
पाराशर्य इतीरितश्श्रुतिगुरुः पैलादिकानां तथा ।
चक्रे ज्ञाननिधिं पुराणनिवहं वासिष्ठवंशोद्भवः
दद्यान्नश्चिरजीवमं सुखकरं पूज्यो मुनीनां सदा ॥

कीशाग्रेसरकेसरी तु जनको मातांजना यस्य च
भानुर्यस्य गुरुस्सदामरनुतः सुग्रीवमंत्री च यः ।
सीतोदंतमथोदधिं सपदि यस्तीर्त्वोक्तवान् राघवं
दद्यान्नश्चिरजीवनं सुखकरं वर्णी **हनूमान्कपिः** ॥

पौलस्त्यः खलु कैकसोदरजनिः गोकर्णतीर्थे तपः
तप्त्वा धर्मधियं स्वयं हि विततां याचेऽब्जयोनिं तु यः ।
श्रीरामं शरणागतोऽग्रजनिना लब्धः पुरां न्यक्कृतिम्
दद्यान्नश्च **विभीषणो** गुणयुतः दैत्यश्चिरं जीवनम् ॥

वीर्याद्यश्च शरद्वतो वरमुनेर्जातः पुरा कानने
तेनैवास्त्रसुशिक्षणं ह्यधिगतं शस्त्रस्य विद्या तथा ।
आचार्यः कुरुपाण्डुपुत्रविततेः यश्चीरवस्त्रावृतः
दद्यान्नश्चिरजीवनं सुखकरं भीष्मादृतो वै **कृपः** ॥

दिव्यर्षिः खलु रेणुकोदरजनिः यो जामदग्न्यः स्मृतः
यश्चिच्छेद नृपांश्च बाहुजनितान्भूमंडलाधिष्ठितान् ।
पित्राज्ञापरिपालकोऽसितजटा-जूटैः परं मंडितः
दद्यान्नश्चिरजीवनं **परशुभृद्रामश्च** वीराग्रणी ॥

## मनोरञ्जनम्

**श्री दीवि. श्रीनिवासदीक्षितः, गुन्टूरु.**

एकः कस्यचित्सिकित्सालयस्याग्रे एकं फलकं (Board) दृष्टवान् । तस्मिन् फलके एवं लिखितम् –

"अत्र मत्कुणसंहारार्थं उचितमाभाषणं क्रियते" । इति । अनुपदं चिकित्सालयं प्रविश्य, वैद्यमुद्दिश्य–

एकः– आर्य ! मत्कुणसंहारः कथं कर्तव्यः ?

वैद्यः– अत्रोपविश । कथयामि । प्रथमं तावत् मत्कुणं गृहीत्वा तं तालवृक्षे रज्जुना बध्वा मया दत्तमौषधं मत्कुणस्य मुखे सूच्या देयम् ।

एकः– तथापि मत्कुणः न चेत् म्रियते, तदा किं कर्तव्यम् ?

वैद्यः– पादघातेन हन्तव्यः ।

# संस्कृतभाषाया अध्ययनप्रोत्साहनाय उन्नतस्तरसंघः आकांक्ष्यते

विविधप्रान्तसंबन्धिनः विविधराजकीयनेतारः लोकसभासदस्याः सेप्टंबर २५ तिथौ प्रधानामात्यायै श्रीमत्यै इन्दिरागांध्यै कांचन विज्ञप्तिं समार्पयन् ।

प्रभुत्वावलंबिते त्रिभाषासूत्रे सकलभारतभाषाजनन्याः संस्कृतभाषायाः विशिष्टस्थानं भवेत् । स्वातंत्र्यसंसिद्धेः अनन्तरं संस्कृतं अतीवानादृतमासीत् । अधिकारसंस्थाः तदनुगमनधिकारसंस्थाश्च तस्या भाषायाः योग्यस्य प्रोत्साहस्य अदानात् अनेका संस्कृतबोधनसंस्थाः अवसिताः, अथवा उन्नतस्थायिन्यः अधमस्थितिं प्रापिताः ।

अयमुन्नतस्तरसंघः संस्कृताध्ययनाध्यापनयोः सम्यक् अभिवर्धनाय आवश्यकचेष्टाः कुर्यात् इति तत्र विज्ञापने विवृतमासीत् ।

विज्ञप्तृषु भूतपूर्वविद्यामात्यः वी. के. आर्.वि. रावः, आचार्यः हीरेन् मुखर्जी (सी. पि. ए.), त्रिदीप् चौधरी (आर्. एस्. पी.), के. सी. हवल्दार् (मार्किस्ट्), जगन्नाथराव् जोषी (ज. सं.), हेच्. एम्. पटेल् (स्वतंत्रः) एतत्प्रभृतयो वर्तन्ते ।



# ग्रन्थपरिचयः

## हनूमद्विजयम्

**प्राप्तिस्थानम्–**
**श्री वैखानसाश्रमः,**
**तिरुमल, (आं. प्र.)**

श्रीवैखानसकुलतिलकेन महाकविना इलत्तूरुसुंदरराजकविना विरचितमिदं संस्कृतनाटकम् श्रीसुन्दरराजकविराजकृतिमा - लायाः प्रथमगुच्छत्वेन श्रीवैखानसविद्यानिलयाधिकारिभिः आन्ध्रलिप्या प्रकाशितम् ।

इदं च मैरावणचरित्रात्मकं अतिमनोहरं सुललितसुकुमार-पदबन्धबन्धुरं रसिकमनांसि अत्यावर्जयति । सकलनाटकलक्षण लक्षितं पात्रोचितभाषायोजितं अंकपंचकात्मकं प्रथते ।

श्रीकृष्णार्याशतकम्, श्रीरामभद्रस्तुतिशतकमिति च एतत्कविरचिते एव प्रकाशिते ।

---

## सम्मानमहोत्सवः

आर्षविद्याभूषण श्री जटावल्लभुल पुरुषोत्तम विदुषः सम्मानमहोत्सवः काकिनाडनगरे अक्टोबर ८, ९ तिथ्योः महता समारोहेण समपद्यत । प्रथमदिने स्वस्तिवाचनपूर्वकं माननीयस्य पुरुषोत्तमस्य नगरोत्सव पुरस्सरं सूर्यकलामन्दिरप्रापणं, वेदभाष्यविशारदस्य श्री उप्पुलूरु गणपतिशास्त्रिणः वेदाशीर्भिः श्री इ. वेदव्यास्य (IAS) महोदयानां प्रारंभभाषणेन अभिनन्दनग्रन्थाविष्करणं, समर्पणं, पुरुषोत्तमगुणप्रशंसनपूर्वकं

"धर्मोपन्यासकेसरी" बिरुद-प्रदानं इत्यादिकं निरवर्तत। द्वितीयदिने प्रातः कविसम्मेलनं आसीत्, यत्र पुरुषोत्तमप्रशंसात्मकाः कविताः विपुला आसन्। सायं च उपाध्यायपंडितपरिषदा, वेदशास्त्रपरिषदा च सन्मानपत्र-समर्पणं च अक्रियत।

एवं दिनद्वयं आन्ध्रदेशीया आस्तिकविद्वज्जनाः सर्वेपि काकिनाडनगरे सन्निधाय पुरुषोत्तमपंडित निर्वर्तितस्य हैंदवधर्मप्रचारसंरक्षणरूपस्य अमोघकार्यस्य यथाशक्ति कार्तज्ञं न्यवेदयन्।

जीयात्पुरुषोत्तमः पुरुषायुषं, पायाच्च हैन्दववैदिकसंस्कृतिं शाश्वतम्।



## शुभा वार्ता



संस्कृतभाषाप्रचारिण्यास्सभायाः रजतोत्सवं वर्षद्वितयात् पूर्वमेव निर्वर्तनीय आसीत्। तथा निर्वतयितुमाकांक्ष्यैव गैर्वाण्यां पदे पदे तन्निर्वर्तनसूचनं चाकरवम्। जनधनमनोबलसाध्ये अस्मिन् महाकार्यं महान्तोन्तरायास्समभूवन्। तथापि महता समारोहेण एष उत्सवः निर्वर्तनीय इत्येव अध्यवस्याम।

अन्ततः १९७२ दिसंबरमासान्त सप्ताहे स महोत्सवः सुनिश्चितः। त्रिदिनं स महोत्सवः संपत्स्यते। तिथयश्च अनतिकाल एव सूच्येरन्। मुंबईनगरस्थ ब्राह्मणमहासभासदस्याः त्रिदिनं च संस्कृतनाटकत्रयं प्रदर्शयितुं अन्वमोदन्त। नामतस्तानि— शाकुन्तलं, मृच्छकटिकं, स्वप्नवासवदत्तं च

भविष्यति । तत्तद्दिनेऽध्यक्षोपन्यासकाश्च दिनत्रयकार्यक्रमश्च आह्वानसंघेन समालोच्यन्ते । अभिलषिता महानुभावाश्च केचनांग्यकुर्वन्, केचन आलोचयन्ति, अन्ये च अभ्यर्थनीया वर्तन्ते ।

एवं आन्ध्रराष्ट्रस्य संस्कृतस्यैव वा समुत्तेजनप्रदं इमं उत्सवं निर्विघ्नं निर्वर्तयितुं उचितमार्गसूचन-धन-धान्य-वस्तुप्रदानादिभिस्साह्यमारचयितुं च सहृदयान् प्रार्थयते ।

**ति. कं. तिरुवेङ्कटाचार्यः,**
प्रधानमन्त्री.



## आवश्यकं सूचनम्

एतत्सभापरीक्षाणां नियमावलिः १९७५ मार्चपर्यन्तं अनुवर्तेत । पुस्तकानि तान्येव भवेयुः । कोविदपरीक्षाविषये च केन्द्रस्थलनियमनमयोजितम् । नूतना नियमावलिः ०–१५ सीटिकानां प्रेषणे प्रेष्येत ।

**ति. कं. तिरुवेङ्कटाचार्यः,**
प्रधानमन्त्री.



## సంతానదీపిక (తెలుగులిపి)

సాంధ్రతాత్పర్యము. సకలవిధసంతానప్రతిబంధయోగములను జాతకచక్రమున గుర్తించుటయు, ఆ ప్రతిబంధములకు కారణములు తెలిసికొని, వానికి ప్రాయశ్చిత్తములు నిర్ణయించుటయు సప్రమాణముగా నిందు వివరింపబడియున్నది.

దీని వెల రు 1-00 మాత్రము,
పోస్టేజి ప్రత్యేకము.

## శ్రీ వైష్ణవస్తోత్రమంజరి (తెలుగులిపి)

ఇందు శ్రీవైష్ణవులకు నిత్యానుష్ఠేయములగు స్తోత్రము లన్నియు చేర్పబడియున్నవి. శ్రీరామానుజాష్టోత్తరశతనామస్తోత్రముతోపాటు నామావళియును కూర్పబడియున్నది.

వెల రు. 1-00 మాత్రము.
పోస్టేజి ప్రత్యేకము.

దొరకుచోటు:—

విజయ నిశ్రేణి గ్రంథమాల,
8-2-44, జండావీధి, చిత్తూరు.

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
R. N. 1845/60. Postal R. No. H. 493

# गैर्वाणी

भारतसर्वकारेण पुरस्कृता च
वार्षिकम् ४-००

---

## प्रहेलिका

वटुर्ययाचे बलिदैत्यपं किं ? १
उन्मत्तबुद्धेर्नभवेत्सदा का ; २
स्वातन्त्र्यहेतुर्भुवि भारते कः ? ३
एकोत्तरं वर्णयुगात्मकं भोः ।

गां धीः = गांधीः
१ २ ३

– बालगणपतिभट्टः, श्रीरंगपत्तनम्.



Published by Sri N. Ramanatha Iyer B. A; B. L., Advocate
& Secretary S, B, P, Sabha, Chittoor (A, P,)
Printed by Sri T K Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C 1500